पञ्चत्रिंशदधिकशततमोऽध्यायः

जनमेजय उवाच

हरिवंशे पुराणे तु श्रुते मुनिवरोत्तम ।

किं फलं किं च देयं वै तद् ब्रूहि त्वं ममाग्रतः ।। १ ।।

वैशम्पायन उवाच

हरिवंशे पुराणे तु श्रुते च भरतोत्तम ।

कायिकं वाचिकं चैव मनसा समुपार्जितम् ।। २ ।।

तत् सर्वं नाशमायाति तमः सूर्योदये यथा ।

अष्टादशपुराणानां श्रवणाद् यत्फलं भवेत् ।। ३ ।।

तत् फलं समवाप्नोति वैष्णवो नात्र संशयः ।

श्लोकार्धं श्लोकपादं वा हरिवंशसमुद्भवम् ।। ४ ।।

शृण्वन्ति श्रद्धया युक्ता वैष्णवं पदमाप्नुयुः ।

जम्बूद्वीपं समाश्रित्य श्रोतारो दुर्लभाः कलौ ।। ५ ।।

भविष्यन्ति नरा राजन् सत्यं सत्यं वदाम्यहम् ।

स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः ।। ६ ।।

दक्षिणा चात्र देया वै निष्कत्रयसुवर्णकम् ।

वाचकाय यथाशक्त्या यथोक्तं फलमिच्छता ।। ७ ।।

स्वर्णशृङ्गीं च कपिलां सवत्सां वस्त्रसंयुताम् ।

वाचकाय प्रदद्याद् वै आत्मनः श्रेयकाङ्क्षया ।। ८ ।।

अलंकारं प्रदद्याच्च पाण्योर्वै भरतर्षभ ।

कर्णस्याभरणं दद्याद् यानं च सविशेषतः ।। ९ ।।

भूमिदानं समादद्याद् ब्राह्मणाय नराधिप ।

भूमिदानसमं दानं न भूतं न भविष्यति ।। 3.135.१० ।।

शृणोति श्रावयेद् वापि हरिवंशं तु यो नरः ।

सर्वथा पापनिर्मुक्तो वैष्णवं पदमाप्नुयात् ।। ११ ।।

पितॄनुद्धरते सर्वानेकादशसमुद्भवान् ।

आत्मानं ससुतं चैव स्त्रियं च भरतर्षभ ।। १२ ।।

दशांशश्चात्र होमो वै कार्यः श्रोत्रा नराधिप ।

इदं मया तवाग्रे च सर्वं प्रोक्तं नरर्षभ ।। १३ ।।

यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।

अपुत्रः पुत्रमाप्नोति अधनो धनमाप्नुयात् ।। १४ ।।

नरमेधाश्वमेधाभ्यां यत् फलं प्राप्यते नरैः ।

तत् फलं लभते नूनं पुराणश्रवणाद्धरेः ।। १५ ।।

ब्रह्महा भ्रूणहा गोघ्नः सुरापो गुरुतल्पगः ।

सकृत्पुराणश्रवणात् पूतो भवति नान्यथा ।। १६ ।।

इदं मया ते परिकीर्तितं महच्छ्रीकृष्णमाहात्म्यमपारमद्भुतम् ।

शृण्वन् पठन्नाशु समाप्नुयात्फलं यच्चापि लोकेषु सुदुर्लभं महत् ।। १७ ।।

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां खिलभागे हरिवंशे भविष्यपर्वणि श्रवणफलकथने पञ्चत्रिंशदधिकशततमोऽध्यायः ।। १३५ ।।

।। हरिवंशपर्व सम्पूर्ण ।।